इन्दीवरं चारविन्दं शतपत्रं च पुष्करम् ॥२१॥

स्यादुत्पलं कुवलयम्

तत्र नीलोत्पले । इन्दति शोभैश्वर्यं प्राप्नोतीति इन्दीवरम् । अरान् राजी विन्दति इति अरविन्दम् । विद्लृ लाभे विद् अरपूर्वः । अरान् विन्दतीति अरविन्दः । "कर्मणि च विदः" श प्रत्ययो भवति । इति परसूत्रम् । स्वमते–अन्यत्रापि चेति [कर्मण्यण्[1]] अण बाधक । "-शादिशाति वेपुदेजिचेतिधारिपारिलिपि(म्पि)विन्दां त्वनुपसर्गे" एषामनुपसर्गे शो भवति । चक्रत्वाऽव्ययः अरविन्दम् । विन्दी (पुण्डरीक) कमलेऽर्थे तु (अपि) अरविन्दम् । रागविशेषस्य अरविन्दः । केचित्कम लेऽपि पुंस्त्वं मन्यन्ते । शतं पत्राण्यस्य शतपत्रम् । क्लीबे । शोभां पोषयति पुष्यति वा पुष्करम् । शोभामुत्कर्षेण पलति गन्धयतीत्युत्पलम् । कौ वलते प्राणितीति कुवलयम् । कुत्सितो वलिर्बलमः पक्षेऽन्न मत्स्येति भीमोक्त ।

विशेषमाह—

अथ नीलाम्बुजन्म च ।

इन्दीवरं च नीलेऽस्मिन् सिते कुमुदकैरवे ॥२२॥

नीलाम्बुजन्म । इन्दतीन्दीवरम्[3] । कुवलय [उत्पलमिति] सामान्यस्य [ नीले ] विशेष वृत्ति । अस्मिन् सिते । रात्रौ विकासं करोति चन्द्रेण काम्यते वा कौ मोदते वा कुमुदम् । वाच्यम् । के उदके वसो रौति केरवो हंसः तस्येदं प्रियं कैरवम् । क्लीबे ।

तद्वती

तस्य कमलस्य पश्यसि 'वती' इति प्रयुज्यमाने कमलिनीनामानि भवन्ति । तामरसवती कमलवती, नलिनवती पद्मवती सरोजवती, सरसीरुहवती, कोकनदवती पुण्डरीकवती, महोत्पलवती, अर विन्दवती शतपत्रवती ।

विसिनी ज्ञेया

दिनविकासिन्यामेव[4] । बिसमस्त्यस्या बिसिनी । नलिनी । पद्मिनी । मृणालिनी ।

प्रततीर्वल्लरी लता ।

वल्लीनामानि योज्यानि–

चतुर्थं[5] ( चत्वारो च ) लक्ष्याम् । प्रतनोतीति प्रतती । प्रकृष्टा ततिरस्या प्रततीः[6] प्रततिश्च । जपादित्वात्द्वत्वम् । वल्लते वल्लरी । लाति लताति चित्तं वा लता[7] । वल्ल्यते वेष्ट्यते वल्ली । वल्लादीः । वल्लिरित्यपि । विरुधामी । वल्ली । मावस । वीरुद्( धू ) गुल्मिनी प्रतानिनी शारिवा क्रिमी च । वृक्षशाखानामपि ।

---

१ का सू ४।३।१ । २. का सू ४।३-२४ । ३ इन्दतीतीन्दीः लक्ष्मी । सर्वधातुभ्य इन् उ सू ४।११७ इतीन् । कृदिकारादक्तिन इति ङीष् च । तस्यावरमिष्टम् इति अनुपसर्गत्वमप्यूह्यम् । ४ एका विसेनीशब्द इत्यर्थः । ५ मत चत्वारो मतर्यामिति पुष्पम् । ६ प्रतनोतीति प्रततिः । तन् धातौ क्विप् । तौ च संज्ञायामिति क्विप् । पृषोदरा दित्वादस्य च इत्यन्वय । ७ लाति शोभां चातुर्येष्नाभ्यो लवतीति लता । पचाद्यच् इत्यन्वय । ६ सारिवाशब्दोऽनन्तमूलनामकौषधिविशेषवाचकः । क्रिमिः स्त्री स्वर्णपुष्पा स्यादपि मालापत्रायाम् इति विश्वलोचनप्रमाणात् क्रिमिशब्दः । क्रिमीशब्दो स्वर्णपुष्पी-माला-पत्रायवाचकः । वृक्षशाखानां लतानां वा उभयत्रप्रसिद्धौ । अतोऽभेदमेव प्रमाणम्

वा रमणी । नरेषु दृश्यते गच्छति ईर्ष्ये वा दयिता । प्रीणाति पतिचित्तं रञ्जयति प्रिया । इष्यते इष्यते वा इष्टा । प्रकृष्टो मदोऽस्याः प्रमदा । काम्यते नरेण कान्ता । चण्डते कुप्यति चण्डी । चण्डिका च । प्रणयोऽस्या अस्तीति प्रणयिनी ।

सती पतिव्रता साध्वी पतिवत्येकपत्यपि ।

मनस्विनी भवत्यार्या–

षट् पतिव्रतायाम् । एक पतिरस्तीति सती[1] । पतिव्रतं करोति पतिरेव व्रतं सेव्यो नान्यो यस्या इति वा पतिव्रता । पतिसेवैव व्रतं यस्याः पतिव्रता । मनुस्मृति—"नास्ति[2] स्त्रीणां पृथग्यज्ञो न व्रतमिति ।" साधयति साध्वी । पतिरस्या अस्तीति पतिवत्नी[3] । एकः पतिर्यस्याः सा एकपत्नी । मनोऽस्या अस्तीति मनस्विनी । अर्यते सेव्यते आर्या । सुचरिता ।

विपरीता निरूप्यते ॥ ३४ ॥

मया धनञ्जयेन आप्यकर्त्रा अमरकीर्तिना वा कथ्यते विपरीता असच्चरित्रा ।

बन्धकी कुलटा मुक्ता पुनर्भूः पुंश्चली खला ।

षट् बन्धक्याम् । बध्नाति दयमविष्टानि बन्धकी । कुलमटति कुलटा । तथा चोक्तम् 'टल दृवल वैक्लव्ये' इत्यादि । अस्योपधाया दीर्घे । कुलपूर्वी । कुलं टालयति कुलटा । 'कुले अटते टिलुक् च' कुले उपपदे अटतेरिष्टस्तस्य अः प्रत्ययो भवति इलुक् च । स्वाचारं मुच्यते (स्म) यत्या धनैर्वा मुक्ता । पुनर्भवतीति पुनर्भूः । पुमांसं चालयति पुंश्चली । खं पञ्चेन्द्रियोत्पन्नसुखं लाति गृह्णातीति खला, अन्यपुरुषसम्पर्कात् । पांसुला स्वैरिणी असती इत्वरी धर्षणी अविनीता, अभिसारिका चपला ।

स्पर्शाऽभिसारिका दूती स्वैरिणी शम्फली तथा ।

पञ्च दूत्याम् । 'स्पृश संस्पर्शे' । स्पृशति, स्पृशयति, अस्प्राक्षीत् अस्पर्शं वा घञ् । स्पर्शः । 'पद रुजविशस्पृशो घञ्' । नामिन[4] श्च गुणः । स्त्रियामाप्' आप्प्रत्ययः । स्पर्शा । पुरुषान्तरमभिसरति अभिसारिका । दूयन्तेऽस्या[5] मीलनाद् दूती । 'ईर् गतौ कम्पने च' । ईर् । ईरणम् ईरः । 'भावे' घञ् प्रत्ययः । स्वस्य ईरः स्वैरः । स्वैरो विद्यतेऽस्या स्वैरिणी । 'तदस्यास्तीति मत्वन्तस्येन्' इन् । नद्यादिभ्यश्चाद्' ई प्रत्ययः । ऋषुवर्णेभ्य नस्य णत्वम् । शं सुखम् फलति निष्पादयतीति शम्फली । तथा तेनैव प्रकारेण ।

गणिका लञ्जिका वेश्या रूपाजीवा विलासिनी ।

पण्यस्त्री दारिका दासी कामुकी सर्ववल्लभा ॥ ३६ ॥

नव वेश्यायाम् । गणाः पेटकोऽस्त्यस्या गणमतीभरानीश्वरी वा गणिका । 'लजि लाजि छाया लञ्ज तर्ज भर्त्सने' । लञ्जयति निःस्नान्पुरुषान् लज्जतीति लञ्जिका । वेशो वेश्यावाटे भवा वेश्या[12] । रूपेण या समन्ताज्जीवतीति रूपाजीवा । विलासोऽस्या अस्तीति विलासिनी । तथा चोक्तम्—

'हावो मुखविकारः स्याद् भावश्चित्तसमुद्भवः ।

विलासो नेत्रजो ज्ञेयो विभ्रमोऽत्र दृगन्तयोः ॥

१ अस्धातो शतृप्रत्ययान्तो ङीबन्तः सतीशब्दः । २ 'नास्ति स्त्रीणां पृथग् यज्ञो न व्रतं नाप्युपोषणम् । पतिं शुश्रूषते येन तेन स्वर्गे न हीयते" इति मनुस्मृति ५।१५५। ३ पतिवत्नी, एकपत्नी इति पाठो युक्तः । ४ का स ५।४७ । ५. का सू ४।५।१ । ६ का सू ३।५।२ नामिनश्चोपधाया लघोः इति पूर्वसूत्रम् । ७. दूयन्ते परितप्यन्ते । अत्र कर्तरि स्त्रीपुमांसः । ८ का सू ४।५।१ । ९. का सू २।६।१५ । १० का सू २।४।५ । ११ का सू २।४।४८। 'रषुवर्णेभ्यो नोणमनन्त्य स्वरहयवकवर्गान्तरोऽपि' इति पूर्वसूत्रम् । १२. वेशेन नेपथ्येन शोभते 'धर्मपथ्यर्थन्यायादनपेते' इति यत् । वेशो भवा दिगादित्वाद्यत् ।

( माघ ) पूर्वाम्भौ । शीतोष्णौ ( मासेषु ) पूर्वाम्भौ मघौरिन्दुमाष्करौ (तौ) शीतोष्ण (माघ) पूर्वाम्भौ । शीतदीधिति । शीतदीधितिमान् । शीतभानु । शीतभानुमान् । शीतांशु । शीतांशुमान् । शीतगभस्तिः । शीतगभस्तिमान् । शीतकिरण । शीतकिरणवान् । शीतपाद । शीतपादवान् । शीतरुचि । शीतरुचिमान् । शीतमरीचि । शीतमरीचिमान् । शीतार्चि । शीतार्चिष्मान् । शीतभा । शीतभावान् । शीतगु । शीतगोमा[1] (मा) न् । शीतद्युति । शीतद्युतिमान् । शीतप्रभ । शीतप्रभावान् । शीतदीप्तिः । शीतदीप्तिमान् । शीतज्योति । शीतज्योतिष्मान् । शीतमहा । शीतमहस्वान् । शीतधामा । शीतधामवान् । शीतरश्मि । शीतरश्मिवान् । शीतोर्म । शीतोर्मवान् । शीतविभावसु । शीतविभावसुमान् । किरणशब्दानां ( भोग्य ) पूर्वे शीतशब्दप्रयोगे चन्द्रनामानि भवन्ति । उष्णशब्दप्रयोगे सूर्यनामानि भवन्ति । उष्णदीधिति । उष्णदीधितिमान् । उष्णभानु । उष्णभानुमान् । उष्णोस्र । उष्णोस्रवान् । उष्णांशु । उष्णांशुमान् । उष्णगभस्ति । उष्णगभस्तिमान् । उष्णकिरण । उष्णकिरणवान् । उष्णपाद । उष्णपादवान् । उष्णरुचि । उष्णरुचिमान् । उष्णमरीचि । उष्णमरीचिमान् । उष्णभा । उष्णभावान् । उष्णतेजा । उष्णतेजस्वान् । उष्णार्चि । उष्णार्चिष्मान् । उष्णगु । उष्णगोमान् । उष्णद्युति । उष्णद्युतिमान् । उष्णप्रभ । उष्णप्रभावान् । उष्णदीप्ति । उष्णदीप्तिमान् । उष्णज्योति । उष्णज्योतिष्मान् । उष्णमहाः । उष्णमहस्वान् । उष्णधामा । उष्णधामवान् । उष्णरश्मि । उष्णरश्मिवान् । उष्णोर्म । उष्णोर्मवान् । उष्णविभावसु । उष्णविभावसुमान् ।

शशी विधुः सुधासूतिः कौमुदीकुमुदप्रियः ।
कलाभृच्चन्द्रमाश्चन्द्रः कान्तिमानोषधीश्वरः ॥ ४७ ॥

शश चन्द्रे । शशोऽस्यास्तीति शशी । विदधात्यमृतं विधुः । "धौ धारणे[2]" । सुधा अमृतं सूयते सुधासूतिः । कुमुदानामिदं विकास (स) हेतुत्वात्कौमुदी ( ज्योत्स्ना तस्याः प्रियः कौमुदीप्रियः ) । कुमुदानां प्रिय अभीष्टः कुमुदप्रियः । कलां बिभर्तीति कलाभृत् । "मा माने" चन्द्रं मातीति चन्द्रमाः[3] । 'चन्द्रे[4]' मातेः' चन्द्रे उपपदे असुनप्रत्ययः मस्य लोपो भवति । असुधातुप्रत्यये मारलोपः । भिन्नयोग स्वार्थ एव । चन्दतीति चन्द्रः । "स्फायि तञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्विन्दी-भ्यो रक्" । कान्तिरस्यास्तीति कान्तिमान् । ओषधीनामीश्वरः ओषधीश्वरः । इन्दुः सोमः, राजा, रोहिणीवल्लभः, अब्जः मृगाङ्कः अभिनेत्रप्रसूतः । तथा चोक्तं महाकविनाः—[5]

आद्यं नेत्रोत्थमत्रेः सुतममृतनिधेः च हरेर्नर्मबन्धु
मित्रं पुष्पायुधस्य त्रिपुरविजयिनो मौलिभूषाविधानम् ।
वृत्तिक्षेत्रं सुराणां यदुकुलतिलकं बान्धवं कैरवाणां
सम्प्रीतिं वस्तनोतु स्थिरमनियतिश्चन्द्रमाः सर्वकालम् ॥"

---

१ "मातुपमासाम इत्यादि वत्वविधायक सूत्रम । मवर्णावर्णोपधात्मवर्णावर्णोपधाच्च मतोर्मकारस्य वकारं शास्ति । अत्र तथात्वाभावात् "शीतगोमान्' इति वक्तव्यम । यत्तूक्तं शीत गोशब्दस्य कर्मधारये ततो "गोरतद्धितलुकि' इति टचो दुर्वारत्वात् "शीतगवमान्" इति सुवचम् । सिद्धान्तस्तु भेदशस्यौ मनुविधः । तदुक्तं "न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर । २ का उ द ५।२। कुरुत्सव । ३ चन्द्रं कर्पूरं माति तुलयति लाञ्छनेनेति मन्योऽपि विग्रहार्थ । चन्द्रमाह लार्थ मिमीते तुलयति लाञ्छनेनेति विग्रहान्तरमप्यूह्यम् । ४ का उ द ४।२२७। ५ का उ द २।१४। ६ भाष्य १।४७ सती ।

काष्ठा ककुम् दिगाशा च दक्षकन्या तथा हरित् ।

काशृ दीप्तौ। काशन्ते यस्यां (नक्षत्रादीनि) काष्ठा[1] । क स्कुम्नाति विस्तारयति ककुप्[2] । शान्तम् । दिशत्यवकाशं दिक् । "[3]ऋत्विग्दधृक् स्रग्दिगुष्णिहश्च" इति साधु । आस्तृते आशा । दक्षः प्रजापतिः तस्य कन्या दक्षकन्या । हरत्यनया हरित्[4] ।

तत्पर्यायपरं योज्यं प्राज्ञैः पालगजाम्बरम् ॥ ६१ ॥

काष्ठादिनामतः परं योज्यं प्राज्ञैः निपुणैः पालगजाम्बरम् । काष्ठापालः । ककुप्पालः । दिक्पालः । आशापालः । दक्षकन्यापालः । हरित्पालः । पालप्रयोगे दिग्पतिनामानि भवन्ति । काष्ठागजः । ककुब्गजः । दिग्गजः । आशागजः । दक्षकन्यागजः । हरिद्गजः । अम्बरशब्दप्रयोगे दिगम्बर नामानि भवन्ति । काष्ठाऽम्बरः । ककुबम्बरः । दिगम्बरः । आशाऽम्बरः । दक्षकन्याम्बरः । हरिदम्बरः । तथा च—

"गिरिकन्दरदुर्गेषु ये वसन्ति दिगम्बराः ।
पाणिपात्रपुटाहारास्ते यान्तु परमां गतिम् ॥"

एवंविधा मुनयो अस्माकं शरणं भवन्तु जन्मनि जन्मनि ।

पवनः पवमानश्च वायुर्वातोऽनिलो मरुत् ।
समीरणो गन्धवाहः श्वसनश्च सदागतिः ॥ ६२ ॥
नभस्वान् मातरिश्वा च चरण्युर्जवनस्तथा ।
प्रभञ्जनः—

पञ्चदश वायोः । पवते जगत् पवित्रीकरोति पवनः । युच् । "पूङ् पवने । पू । पवते पवमानः । "[5]पूङ्यजोः शानन्" शानमानः । अनि[6] अनिलः[7] नाम्यन्त्यगुणः । "वा गतौ । "[8]आनी ऽन्त मानें" मोऽन्त । वातीति वायुः । "[9]कृवापाजि"—ति उण् । वाति सर्वत्राऽस्खलितं वा वातः । वाति अस्खलितं याति वातः । "[10]मृगृणा...मिलिभ्यस्तः" । अनेन जगत् अनिति प्राणिति न निलति वा अनिलः । "निल गहने" । मुवन्त्यनो म्रियन्ते स्पर्शेनास्य मरुत् । तान्तम् । "[11]मृग्रोरुतिः" उतिप्रत्ययः । सम्यगीरयति समीरणः । गन्धं वहति गन्धवहः । गन्धवाहः । गन्धवाही । श्वसन्त्यनेन श्वसनः । सदा सर्वकालं गतिर्यस्य स सदागतिः । नभ आकाशमस्यास्तीति नभस्वान् । मातरि रेतः श्वयति वर्धते नाम्नो मातरिश्वन् । मातरिश्वेव भवति[12] मातरिश्वा । चरचरं याति परे

१ "काशृ दीप्तौ" "हनिकुषि" इत्यादि २।२। पा उ सूत्रेण क्थन् । २ कं वात स्कुम्नाति विस्तारयति । क्विप् । पृषोदरादित्वात्सलोपः । केनाविशेन वातेन वा कुत्सितानि भानि नक्षत्राणि यस्यामिति "ककुभा इत्याकारो-पीति केचित् । ३ का सू ४।३।७१। ४ हरन्ति नयन्ति अनया हरित् दिग् शानेनैव कश्चित् कुत्रचित् कुत्रचिदायाति । "दुहरकिरुशिभ्य इतिः इतीति । ५. का०सू ४।४।८। ६ अभिकरणा कर्त्तरि इति पूर्वे सूत्रम् । का सू १।२।१२। इत्यभिकरणः । ७ "अनि च विकरणे का सू १।५।१। ८ का सू १।२।१४। ९. का सू ४।४।७। १ का उ सू १।१। ११ का उ सू ४।२७। १२ का उ सू १।३ । १३ मातरि जनन्यां रेतः प्रसिक्तं यथा वर्धते, तथाऽन्यत्रेपि वर्धमानो वायुः मातरिश्वा इत्याशयः । क्षीरस्वामी तु—'मातरि खे श्वयति इत्याह । रामाश्रमस्तु—"मातरि जनन्यां श्वयति वर्धते गर्भस्थशिशुपालनात्" इत्याह । आपस्तम्बरत्नाकरे त्रिदेवेभ्योऽन्यमातृकुक्षिमथितं तेनैव कुलिशघात तद्गर्भस्यैकोनपञ्चाशत्खण्डीकरणस्य पुराणप्रसिद्धत्वात्समरुज्जन्मप्रसङ्गम् । "टु ओश्वि गतिवृद्धी । श्वयतेः 'श्वन्नुक्षन्' इति कनिन्प्रत्ययो निपातः सप्तम्या अलुक् च ।

नरस्यापत्यं वा । नरायनवद् इति वाक्येन नरायणोऽपि । हरत्येव हरिः । केशाः सन्त्यस्य केशी । मन्यते जनैः मधु । मनिजनिनिमां मधकतनाकामं एषामुप्रत्ययो भवति मधकतनाकाम मधासंज्ञ मारेणा भवन्ति । "बल बलन च । बलतीति बलिः । "ह "र्वधातुभ्य । कम्पते बाणः । तदादि सूत्रम् । तदादीनां केशवादीनां सूदनो नारायणोऽपि । केशी मधुः बलिः बाणः हरिण्यकशिपुः मुरः एष्व शब्देभ्यः परतारिशत्रौ मनुष्यनामे नारायणनामानि भवन्ति । केशिवैरी । केशवरातिः । केशमित्रः । केशिद्विट् । केशिसपत्नः । मधुवैरी । मधरातिः । मधुमित्रः । मधारिः । मधुद्विट् । मधुसपत्नः । मधुरिपुः । बलिवैरी । बल्यरातिः । बल्यमित्रः । बलिद्विट् । बलिसपत्नः । बलिरिपुः । बाणवैरी । बाणारातिः । बाणामित्रः । बाणारिः । बाणद्विट् । बाणसपत्नः । बाणरिपुः । हिरण्यकशिपुद्विट् । हिरण्यकशिपुसपत्नः । हिरण्यकशिपुरिपुः । मुरवैरी । मुरारिः । मुरारातिः । मुरद्विट् । मुरसपत्नः । मुररिपुः । मधुशत्रुः । बाणशत्रुः । मधुसूदनः । बलिसूदनः । बलिध्वंसनः । बाणसूदनः । हिरण्यकशिपुसूदनः । केशिसूदनः । इत्यादि पर्यायनामानि । शूरसेनस्यापत्यं शौरिः । शौरिर्वा । पद्मं नाभावस्य पद्मनाभः । "संज्ञायां नाभिः । अचोऽन्त्यादि टि । अजोऽन्तस्य प्रत्ययो भवति । गां भुवं विन्दति गोविन्दः । वसुदेवस्यापत्यं वासुदेवः । "मधुसूदनः । श्रीवत्साङ्कः । श्रीपतिः । पीतवासाः । विष्वक्सेनः । विश्वरूपः । मुकुन्दः । चक्रधरः । पुण्डरीकाक्षः । वैकुण्ठः । जनार्दनः । रथाङ्गपाणिः । दाशार्हः । कंसारिः । वृषाकपिः । अच्युतः । हृषीकेशः । "बभ्रुः । विष्टरश्रवाः । वनमाली । जनार्दनः । जिनः । शम्भुः । इत्यादयूह्यम् ।

*लक्ष्मीः श्रीर्गोमिनीन्दिरा ।*

चत्वारः श्रियाम् । लक्ष दर्शनाङ्कनयोः । लक्षयति दर्शयति पुण्यकर्माणं जनमिति लक्ष्मीः । "लक्षेर्मोऽन्तश्च" प्रत्ययादीश्वत्यो भवति मीऽन्तश्च । श्रञ् श्रिञ् (सेवायाम्) । पुण्यकृतं श्रयतीति श्रीः । श्विभिश्रिभ्यामुत्का किवृदीर्घश्च एभ्यः क्विप्प्रत्ययो भवति दीर्घश्च स्वरस्य चैवम् । गां मिनोतीति गोमिनी । इन्दति परमैश्वर्ययुक्ता भवति इन्दिरा । कमला । पद्मा । पद्मालया । हरिप्रिया । क्षीरोदतनया । माया । मा । ता । ई । का । रमा । सीता । चला (चपला) । भर्गरी । अम्बिकाऽपि ।

**तत्पतिः शैलभूम्यादिधरश्चक्रधरस्तथा ॥ ७६ ॥**

तस्याः पतिस्तत्पतिः । लक्ष्मीपतिः । श्रीपतिः । गोमिनीपतिः । इन्दिरापतिः । इत्यादीनि हरिनामानि स्युः । शैलभूम्यादिधरः । पर्वतधरः । शैलधरः । दरीभृद्धरः । अचलधरः । महीध्रधरः । सानुमद्धरः । गिरिधरः । नगधरः । शिलोच्चयधरः । भूमिधरः । भूधरः । पृथ्वीधरः । महीधरः । मेदिनीधरः ।

---

१ मन्यते जनैः अज्ञानेन इति शेषः । २. का उ सू. १।८ । ३ का उ सू. ३।१४ । ४ का सू. २।६।४१ । वृत्तिः । ८ । ५. अथ कृतमयकर्मेत्रियकं ज्ञानं येन, अयो न क्षीयते वायु इति वा विमर्शोऽधिकोऽस्मत । ६ मधुकेशः शब्दस्य 'विष्णु पर्यायत्वे कल्पद्रुरपि प्रमाणम्— मधुकेशः कौस्तुभौरा सौमगर्भो बराधर । १।२।७ । ७ बभ्रु शब्दस्य नारायणार्थेऽमरोऽपि प्रमाणम् । "विपुले नकुले विष्णौ बभ्रु स्यात्पिङ्गले त्रिषु ।" ३।३।१७ । ८. का उ सू. ३।१५ । ९ का उ सू. २।२३ । १० 'गोमिनी' शब्दस्य लक्ष्म्यर्थे प्रमाणं मृग्यम् । अमरकोषोऽपि चिन्त्यः । मतमें गौराख्या मिनिप्रत्यये गौपि गोपालिकार्थे तस्य महिषी कोशान्तरदर्शनात् । ११ ता, ई का एतौ लक्ष्म्यर्थे प्रमाणम्— "लक्ष्मी पद्मा रमा या मा ता श्री कमलेन्दिरा अपि चि २।१४ । 'या' इत्यत्र ई का इति पठेत् । लक्ष्म्यास्तु भर्गरी विष्णुशक्ति क्षीराब्धिमानुषी । इति तट्टीकायाम् ।

प्रशस्ता वागस्त्यस्य वाग्मी । न्याये विचारे नियुक्तो नैयायिकः । धीरः । सम्यग्दर्शी । विपश्चित् । दूरदृक् । आमनस्वः । ज्ञः । मनीषी । ज्ञः । दोषज्ञः । कोविदः । प्राज्ञः । सुधीः । कृती । कृष्टिः[1] । कविः । व्यक्तः । विशारदः । संख्यावान् । मतिमान् ।

## पारिषद्यो बुध सभ्य सद संसत्समोषित ।

षद् समावृत्तौ । परिषदि सभायां भव पारिषद्यः । बध् । बुध अवगमने । बोधतीति बुधः । सभायां साधुः सभ्यः । कुशलो योग्यो हितश्च साधुरुच्यते । सदसि उचितो योग्य सदउषिताः । संसदुषिताः समोषिताः । सभासद् । सभास्तारः । सामाजिकः ।

## परिषत्समाऽऽस्थानपती—

सद सभायाम् । परिषीदन्त्यस्यां परिषद् । सह भान्त्यस्यां सभा । आसमन्तादस्थीयतेऽस्मिन् आस्थानम् ।

([2]अधिपति राजा) पतिः—आस्थानं सभा इत्यादिपर्यायनामतोऽधिपतिः पतिरित्यादिपर्यायाः प्रयुक्तेषु सत्सु राज्ञो नामानि भवन्ति । परिषदधिपतिः । परिषत्पतिः । सभाधिपतिः । सभापतिः । आस्थानाधिपतिः । आस्थानपतिः ।

## राजसूयो नृपक्रतु ॥ ११२ ॥

अभ्यवक्षेपणस्नानयोः (प्रसवे) हौ । षुञ् अभिषवे । षु । [3]आत्वा च । राजन्पूर्वः राजा सोतव्यो राजा सूयते वा यस्मिन्निति राजसूयः । [4]राजसूयश्च । क्यप्प्रत्ययान्तो निपातः । नृपाणां राज्ञां क्रतुः नृपक्रतुः । तथा च स्मृतौ—

> "गोसवे सुरभिं हन्याद्राजसूये तु भूभुजम् ।
> अश्वमेधे हयं हन्यात् पौण्डरीके च दन्तिनम् ॥"

## विष्टर मल्लिकापीठमासन्दीमासन विन्दु ।

पदाक्रमे । स्तॄञ् आच्छादने । विपूर्वः । विस्तरणं विष्टरः । स्तर[5]वृक्षगमिमश्रमास्व् । अच् । नाम्यन्त्युपधः । षोऽन्त्यादेः । तवर्गीयस्य षत्वम् । [6]तवर्गस्य टवर्गादेशः । मल्यते धार्यते मल्लिका । पेठतीति पीठम् । पृषोदरादित्वादीर्घः । आ समन्तात्सीदन्तीति विकल्पस्यामासन्दी । आस्यते

---

१ अत्र प्रमाणम् अभि चि ३।५। "विद्वान् सुधीः कविविचक्षणलब्धवर्णा ज्ञः प्राज्ञः कृतिकृष्टिनिकामधीरा । मेधाविकोविदविशारदसूरिदोषज्ञाः प्राज्ञपण्डितमनीषिबुधप्रबुद्धाः ॥ व्यक्तो विपश्चित्संख्यावान् सन् इति । २ अधिपती राजा इति प्रतीकमाश्रित्य व्याख्यावर्णनादयं मूल पर्याय इति न भ्रमितव्यम् । पूर्वापरवाक्ययोर्मध्ये अस्यमावेशासम्भवात् पदस्त्वेन स्वतन्त्रपाठस्याभावात् अत्र राजवर्णनस्याप्रसरत्वाच्च । एवं च सभाप्रश्नेन तदधिपते राजन्यपर्यायार्थ-टीकाकृद्धिः शास्त्रवचनमित्येव युक्तं भाति । ३ का सू० ३।८।२४। ४ का सू ४।२।४१। ५ स्मृतौ" इत्युक्तम् । परमयं श्लोको मनुस्मृतौ ना ७ क १ श्लो १ उपलभ्यते । ६ का सू ४।५।४१। ७ का सू ३।८।५। ८ शा सू ६।२।१७२। ९ "आस उपवेशने" । अस्यायः पा उ सू ४।६८। इति रूपमयी भवति अमानग्रहणं च । स्त्रियां ङीप् । तथा चोक्तम्—"स्याद् वेत्रासनमासन्दी इति ३।३४८। अभि चि ।

"आगमेऽपि मोक्षे ज्ञाने बुद्धौ वाचे च भरतराजस्य ।
प्रथमति गीः प्रगीता न चापरो विद्यते ब्रह्मा ॥"

अतः परो ब्रह्मा नास्ति । गोतमो गौर्गौरवात् गौतम । आर्षे महापुराणे—

"गौः स्वर्गः स प्रकृष्टात्मा गोतमोऽभिमतः सताम् ।
स तस्मादागतो देवो गौतमश्रुतिमन्वभूत् ॥"

नाभेर्जातो नाभिजः । अग्रे जातोऽग्रजः । प्रथमत्वात् ।

सन्मतिर्महतिर्वीरो महावीरोऽन्त्यकाश्यपः ।

नाथान्वयो वर्धमानो यत्तीर्थमिह साम्प्रतम् ॥ ११५ ॥

सती शोभना मतिर्यस्य स सन्मतिः । महापुराणे—

"तत्सन्देहे गते ताभ्यां चारणाभ्यां च भक्तितः ।
अस्त्वावेष सन्मतिर्देवो भावीति समुदाहृतः ॥"

( महते पूज्यते इति महतिः ) । महती पूजा यस्य स महतिः । विशिष्टाम् इन्द्रादयसम्भाविनीम् ईम् अन्तरङ्गां समवसरणानन्तचतुष्टयलक्षणां लक्ष्मीं राति ददाति इति वीरः । वीर इति नाम कस्मात्कथम् ? जन्माभिषेके बालत्वादीषद्दर्शनाचलितस्वर्गपतिसुरेश्वरस्य सामर्थ्यज्ञापनार्थं पादाङ्गुष्ठेन मेरुं चालयामासेति वीरनाम कृतम् । महाँश्चासौ वीरः महावीरः । तथा च हरिवंशपुराणभाष्ये—

*कुमारकाले आमलकीक्रीडायां क्रीडतः सङ्गमदेवेन विमानस्थलकनाङ्गकल्पो (को)ऽस्य नाथं महाफटाटोपोपेतं भयानकं सर्परूपं विकृत्य भुजो वेष्टितः । भगवाँस्तस्मात्तस्य फणां विपाटयन्नारोहणं कृत्वा पुनश्चकुर्वीत ।* ततस्तेन महावीर इति नाम कृतम् । अन्त्यं काश्यं तेजः पातीति अन्त्यकाश्यपः । तत परस्तीर्थङ्करो नास्ति । नाथोऽन्वयो यस्य स नाथान्वयः । तथा च—

"चत्वारः पुरुवंशजा जिननृपा धर्मोऽप्यस्ते पुनः
नेमिश्रीमुनिसुव्रतौ हरिकुले वीरोऽपि नाथान्वये ॥
शेषाः समवतान्विता जिनवरा इक्ष्वाकुवंशोद्भवा
मोहाम्भोदविनाशनैकनिपुणाः सङ्घस्य सन्तु श्रिये ॥"

वर्ध समन्तात् ऋद्धं परमातिशयमाप्तं मानं केवलज्ञानं यस्यासौ वर्धमानः ।

"अवृद्धिमागुरिरल्लोपमवाप्योरुपसर्गयोः ।
आप चैव हलन्तानां यथा वाचा निशा दिशा ॥"

इत्यवशब्दस्याकारलोपः । तथा श्रुतिमपि ग्रन्थान्तरे—भगवतो हि गर्भावतारादौ पित्रे मातापितृनिर्मितां विशिष्टां पूजां दृष्ट्वापि स्वस्य च श्रुतिविभवादिकं दृष्ट्वा वर्धमान इति नाम कृतम् । इह अस्मिन् पञ्चमकाले यस्य तीर्थं यत्तीर्थम् साम्प्रतम् अधुना वर्तते ।

सर्वज्ञो वीतरागोऽर्हन् केवली धर्मचक्रभृत् ।

तीर्थङ्करस्तीर्थकरस्तीर्थकृद्दिव्यवाक्पतिः ॥ ११६ ॥

नव जिनेन्द्रे । ज्ञा अवबोधने । ज्ञः । सर्वज्ञः । सर्वं जानाति वेत्तीति सर्वज्ञः । "आतो'ऽनुपसर्गात्कः" प्रत्ययः । 'के[1] यण्वा मोक्षधर्मम्' इति यण्वद्भावात् आलोपः । विशिष्टा ई तां प्रति इतः प्राप्तो रागो यस्य स वीतरागः । अरिहननरजोहनन (रहस्या) भावाच्च परिप्राप्तानन्तचतुष्टयस्वरूपः सन् इन्द्रनिर्मिता

---

१ का सू ४।३।४ । २ का सू ४।१।७ ।

तथा धाराधरमहाभिषेके—

"आमुः पीयूषकुम्भैः स्मृतिमथितमनिभिः शेमुषीवल्लिकन्दै-
र्मेधासस्याम्बुवाहैर्वरफलतरुभिर्नन्त्ररत्नाधिदेवैः ।
निष्पन्नैर्योगपेयप्रचुरसभुरिमस्नेहभूमोऽपि येषां
कुर्मो दैयङ्गवीनैः स्नपनमपनय व्यान्तमानोर्जितस्य ॥

पीयते द्विपदी पितमनेनाज्यम् । तथा क्षीरस्वामिनि—"आ प्रज्ञमीयमाज्यम्' । 'आस्यूर्वादञ्जेः संज्ञायाम् क्यप् । घृतम् । आधारः । स्युतम् । चाम्यम् । हविः ।

दुग्धं क्षीराऽमृतं पय ॥१२२॥

चत्वारो दुग्धे । दुह प्रपूरणे । दुह्यते दुग्धम् । घस्लृ अदने । सौचीऽम्यम् । घस्यते क्षीरम् । घसेः किच्च' ईरमायः । 'गमहनजनेत्युपधालोप । 'शासीघसिशिरां प्रथमः क. । 'शासिवसि घसीनां च षत्वम् । क्'पूर्वयोगे च' । 'व्यञ्जनमल्प' । उपसौ क्षिणु वसु हिंसायाम् । क्षणोतीति क्षीरम् । क्षीरोशीरगभीरगम्भीरा एते ईरमत्ययान्ता निपात्यन्ते । न म्रियतेऽनेन अमृतम् । अजरामरकारित्वात् । पीयते वा तरलत्वात् पयः । ममृतम् । ऊवलम् । स्तन्यम् । पीयूष पयूषं च ।

उदश्विन्मथितं तक्र कालशेय पिबतु गुरु ।

चत्वारस्तक्रे । उदकेन श्वयति वर्धते उदश्वित् । तान्तस्त्वात्सकारान्तः । मथ्यते (स्म) मथितं घोलं च । तक्नति हसं गच्छति तक्रम् । उभयम् । "तक्रं त्रिभागमिश्रं तु केवलं मथितं स्मृतम्' इति धन्वन्तरिः । कलशयां गर्गयां भवं कालशेयं पिबेत् गुरुः । तत्कालेन परिवृतम् । अरिष्टम् । दण्डाहतम् ।

प्रायो वयो दशानेहा पूर्ण यौवनकं विदुः ॥ १२३ ॥
तारुण्यं यौवनं च

अष्टौ तारुण्ये । प्रकर्षेण परलोकगमनेन प्रायः पुंसि । शाम्बोऽपि प्रायम् । ववत वयः । दशति पुरुषाति दशोमुकं दशा । न ईहते[११] चेहते अनेहा । अनेहतीत्यस्तोऽङ्गिरस[१२] एतेऽन्तु प्रत्ययान्ता निपात्यन्ते । ईह चेष्टायाम् । पूरी आप्यायने दिवादी आत्मनेपदी । अवश्यानां प्राक् दु(ब)दीया परस्मैपदी । पूर्वते कश्चित् पूरयति कश्चित् । इस् चुरादयपवा वा । " 'क्वारित अरितलोपः । उभयथा पूरि क्तम् । पूर्यते स्म पूर्णः । निष्ठाक्तः । शान्तसाध्यपूर्णदस्तस्पष्टच्छन्नज्ञप्ताश्चेनन्ताः इत्यनेन पूर्णेति निपात्यते । यूनो भावो यौवनम् । स्वार्थे कः । यौवनकम् । 'युवादिभ्योऽण् । युवो । तरुणस्य

१ पा सू ३।१।१९ । वार्तिकम् । २ पा उ सू ४।१९ । ३ पा सू ३।६।४१ । ४ पा सू ३।८। । ५ पा सू ३।८।२७ । ६ पा क पू सू २९९ । ७ 'व्यञ्जनमस्वर परं वर्णं नयेत्' का त १।१।२१ । ८ पा उ सू १।४८ । ९ अत्र प्रायादयोऽनेहोऽन्ताश्चत्वारो वयोवाचकाः । पूर्णपूर्वका एते चत्वारो यौवनस्तावयदवीत्यनालीति नय । एवं च दश उ वक्ष्ये इति वस्तु युतम् । १ प्रकर्षेण शरीरस्य अमेयावते गच्छति इति हे च । ११ शरीरस्य क्रमेण विकृतिं च वाम्बादीनि दश्यन्ते दशा इति हेम' । १२ नाद्यन्ति मायच्छति वाम्यते नाम्यन्ते वेति रामाश्रम । नम्बाहन एव च इति साधु । १३ पा उ सू ४।१८। १४ पा त ३।६।४७। १५ पा सू ४।६।१ । १६ है श ७।१।६७। युवादेरण् इति सूत्रम् ।

इति मयूरः । 'मयते' करो मौ" । बर्हमस्यास्ति बर्ही । "फल'बर्हाम्यामिनच्' । केका वाणी अस्यस्य केकी । शिखाऽस्त्यस्य शिखी । प्रावृषि वर्षाकाले मयुष्कः प्रावृषिकः । नीलं कण्ठे यस्य स नीलकण्ठः । कलापोऽस्त्यस्य कलापी । शिखण्डोऽस्त्यस्य शिखण्डी । मेघनादी । वर्षोत्सवः । शिखावलः । श्यामकण्ठः । चन्द्रकी । शुक्लापाङ्गः ।

## तत्पतिर्गुहः ॥ १२६ ॥

तस्य पतिस्तत्पतिर्गुहः कार्तिकेयः । मयूरशब्दात् पतिशब्दे प्रयुज्यमाने कार्तिकेयपर्यायनामानि भवन्ति । मयूरपतिः । बर्हिणपतिः । केकिपतिः । शिखिपतिः । प्रावृषिकपतिः । नीलकण्ठपतिः । कलापिपतिः । शिखण्डिपतिः । इत्यादीनि ज्ञातव्यानि ।

## वरटा वारली हंसा—

त्रयो हंसभार्यायाम् । वरं विशिष्टमटति गच्छति वरटा । वरलस्य भार्या वारली । स्वार्थेऽपि । वरला च । हन्तीति हंसी ।

## कोक ईहामृगो वृकः ।

त्रयः दिक कोकते आदत्ते कोकः । ईहा मृगोऽस्यस्य ईहामृगः । ईहां मृगयते वा [3]ईहामृगः । वृक वृक आदाने । वर्कते [4]वृकः । अरण्यश्वा ।

## हरिणो मृगश्च पृषत—

त्रयो मृगे । गीतेन ह्रियते हरिणः । मार्गेषु गच्छते मृगः । पर्षति सिंचति मूत्रेण पृषतः[5] । वान्योऽपि पृषत् । एणः । कुरङ्गः । कुरङ्गम । सारङ्गः । वातायुः । रिश्यः । ऋष्यश्च । रुरुः । न्यङ्कुः । वातप्रमी । शम्बरः । शबलः । कृष्णसारः । कालसारोऽपि ।

## तदङ्कः शर्वरीकरः ॥ १२७ ॥

हरिणपर्यायादङ्कपदे प्रयुज्यमाने चन्द्रस्य नामानि भवन्ति । हरिणाङ्कः । मृगाङ्कः । पृषताङ्कः । इत्यादीनि ज्ञातव्यानि ।

## पन्नगोऽहिर्विषधरो लेलिहानो भुजङ्गम ॥

## नागोरगौ फणी सर्प—

नव सर्पे । पन्नपा न गच्छतीति पन्नगः[6] । नभ्राण्नपादित्यस्योपलक्षणत्वात् । अंहस (ऊेऽ) हि । 'अहि'[7]कम्पोर्नलोपश्च नलोपः । विषं धरति विषधरः । लिहेति लेलिहानः । भुजाभ्यां गच्छति भुजङ्गमः । न गच्छतीति नागः । उरसा गच्छतीत्युरगः । [11]'उरो विहायसी स्फणी च' । उरो विहायसोरुपपदयोर्गमश्च संज्ञायां डो भवति तयोश्च उरविही यथासंख्यं भवतः । फणाऽस्त्यस्य फणी ।

---

१ का उ सू १।४७ । २ पा ५।२।१२२ वार्तिकम्— "फलबर्हाम्यामिनच्" । ३ ईहया महताऽभ्यासेन मृग्यते आलेटीक्रियते इत्यन्यत्र । ४ वर्कतेऽजादिकमादत्ते वृकोति वा वृकः । ५ रामाश्रमस्तु— 'पृषता बिन्दवो बिन्दुसदृशलक्षणान्यस्य पृषतः । अर्श आद्यच् स्यात् । पृषती बिन्दुचित्र इति वा स्या' । ६ पद्भ्यां पतितं यथा स्यात्तथा गच्छतीति रामाश्रमः । सर्वपदयोरिति वार्तिकेन डः । ७ का उ सू ४।४। क्विप्प्रत्ययो नलोपश्च । अहि गतौ । अहति वेगेन गच्छति । ८ भृशं लेढीत्यर्थे यङ्लुगन्तात्— 'ताच्छील्यवयोवचनशक्तिषु चानश्' पा सू ३।२।१२९। इति चानश् । ९ भुजेन कौटिल्येन गच्छति भुज इव गच्छति वेत्यन्यत्र । गमश्च' का सू ४।३।४५। इति । विङ्गुवक्तू भुजङ्गश्च का सू ४।३।४८। इति खचि डे च भुजङ्गमः भुजङ्गः इति । १० नगे पर्वते भवो नागः । अथवा न गच्छतीत्यगः न अगः नागः इत्यन्यत्र । ११ का सू ४।३।४६।

भगस्येदं भागः भाग एव भागधेयम् । नामरूपभागेभ्यो धेयः[1] । स्त्रग्मीर्षाणं किमदं (स्म) सत्कृतम् ।

अघमंहश्च दुरितं पाप्मा पापं च किल्बिषम् ।

वृजिनं कलिलं एनो दुष्कृतम्

अघ पापे । न वहाति माखिनम् अघम्[1] । अंहति गच्छति नरकादिकमनेन अंहः । सान्तम् । दुरितम्[2] । दुर् दौर्गत्यं गतम् । पाति सुगतेर्वारयति पाप्मा । पु सि । 'सर्वधातुभ्यो मन्' । पाति सुगते र्वारयति पापम् । [4] 'पातेः पः' । निम्नत्वेन कल्पते मुहुर्मुहुः किरति गच्छति वा किल्बिषम् । 'किल्बिषा'[5] भ्यधिषौ' एतौ निपात्यन्ते । वृज्यतेऽनेनीयतेऽनेन वृजिनम्[6] । कलयति कलिलम् । कलेरिलः । एति गच्छति [दुर्गतम्] अनेन एनः । सान्तम् । दुष्क्रियते स्म दुष्कृतम् । तमः । कल्कम् । कल्मषम् । अशुभम् । प्रतिबिम्बम् । पङ्कम् । किण्वम् । मलम् । अनेकार्थे ।

तज्जयी जिनः ॥ १३० ॥

तस्य पापस्य जयी तज्जयी । अघजयी । दुरितजयी । पापजयी । इत्यादीनि जिनस्य नामानि भवन्ति ।

सदनं सद्म भवनं धिष्ण्यं वेश्माथ मन्दिरम् ।

गेहं निकेतनागारं निशान्तं निभृतं गृहम् ॥ १३२ ॥

वसत्यावसथावासः स्थानं धामास्पदं पदम् ।

निकायं निलयं पस्त्यं क्षयश्च विदुरालयम् ॥ १३३ ॥

चतुर्विंशतिर्गृहे । जना सीदन्त्यत्र सदनम् । क्लीबे । सीदन्ति सुखं गच्छन्त्यत्र सद्म । "सर्व धातुभ्यो मन्" प्रत्ययः । भवति भूतान्यत्र भवनम् । धिष शब्दे । शेषेऽपि शब्दं करोत्यत्र धिष्ण्यम् । "धिषेर्ण्यः" प्रत्ययो भवति । विशन्त्यत्र वेश्म । नान्तम् । माद्यन्ति जना अत्र मन्दिरम् । स्त्री क्लीबे । मन्दिरा । गेह ईहायां निवारणप्रकाशयोः । गहति शीतवातातपादिकं निवारयतीति गेहम् । गच्छति वा गेहम् । 'गेहे' [11] स्वार्थे । सुखं निक्षिपन्ति जनास्तत्र निकेतनम् । अट्टन्ति गच्छन्त्यत्र आगारम् । अगारं च । निशाम्यन्त्यत्र निशान्तम् । निश्चितं आच्छाद्यते निभृतम् । गृह्णाति नरैरुपार्जितं धनं गृहम् । वसनं वसतिः । आवसन्त्यत्र जना आवसथम् । आ समन्तादुष्यते आवासः । स्थीयते अनेनात्र स्थानम् । दधाति धनादि धाम । नान्तम् । आस्पदं च धामम् । क्लीबे । आस्प(द)पदेऽस्पदम्[14] । पद्यते गम्यते पदम् । निचीयतेऽसौ निकायः । [15] "शरीरनिवासयोः कश्चादेः" घञ् । निलीयते आश्रित्यते (अत्र) निलयम् । पति सीदति निवासे । जना वसन्ति वसन्त्यत्र पस्त्यम्[16] । वस्ते वासे साधु वस्त्यम् । पस्ती

१ पा सू ५।४।३५ वार्तिकम् २ अट्यते गच्छति दानादिनान्यम् । अघि गतौ । पचाद्यच् । आगमशास्त्रस्यानित्यत्वात् नुम् । ३ दुरमितं गमनमननेति रामाश्रमः । ४ का उ सू २।५५। ५ किल्बिषाभ्यधिषौ का उ सू १।२२। ६ वृजी वर्जने । वर्जे किन्त्यदीनम् । वृज्यते वृजिनमित्यपि । ७ कलयति कलयति दुःखमिति शेषः । ८ का उ सू ५।१८। ९ का उ सू ३।६ । १० "तिमिरधिमस्मिन्दिनधिषधिरुधिमुदिभ्यः" किरः पा उ सू १।२१। ११ का सू ३।२।६ । इति किं यस्य गेह इति निपातः । १२ का अट्टति अदृपत बाध बाहुल्य भारप्रत्ययः । अगि गतौ । आद्युदुर्भः । नलोपश्च । १३ निशाया अन्तो नैऽस्त्यत्र । निशायाम् अन्ते गम्यते रमेति रामा श्रम । 'अम गतौ' क्त । १४ "आस्पदं प्रतिष्ठायाम्" पा सू ६।१।१४६। इति सुट् । १५ का सू ४।५।१५। १६ प्रसरस्तावस्ति उदपीभवन्त्यत्र पस्त्यम् । "स्त्ये शब्दसंघातयोः ।

पञ्च कार्यविलम्बे (मिथे) । शीतं करोति मन्दो भवति कार्ये शीतलम् । तावदपि स्तम्भनं तिम्यति तिमिरम्[१] । स्तिमितं स्तिमितं वा पाठः । यथा मन्दं यायम् । मन्यते मन्दम् । विलम्ब्यते स्म विलम्बितम् । चिरमिति चानीहि ।

स्वभावः प्रकृतिः शीलं निसर्गो विस्रसो निजः ।

पञ्च स्वभावे निजे । स्वः स्वकीयो भावः स्वभावः । प्रकृष्टा प्रकृतिः । शील्यते शीलयति वा शीलम् । निसृज्यते निसर्गः । विस्रस्यतीति विस्रसः[२] । विस्राव्यश्च । विस्रम्भः ।

योग्या गुणनिकाऽभ्यासः

त्रयोऽभ्यासे । युज्यते योग्या[३] । गुण्यते पुनरिदं गुणनिका[४] । अभ्यसनमभ्यासः ।

स्यादभीक्ष्णं मुहुर्मुहुः ॥ १८५ ॥

मुहुर्मुहुर्वारं वारं स्यात् भवेत् । अभीक्ष्णम् । अभीक्ष्णम् अभीक्ष्णम् । अभिमुखमीक्ष्यते वा अभीक्ष्णम्[५] । नित्यम् ।

मृषालीकं मृषा मोघम्

चत्वारो[६] अलीके । मृष्यते सह्यते नारकं दुःखमनेन मृषा । आदन्तमव्ययम् । अलति स्वस्मात् (स्वर्गात्)विचारयति अलीकम् । मुष्णाति लपति निमित्तं मुषा । आदन्तमव्ययम् । मुह्यतेऽत्र चित्तं मोघम् ।

वितथं वितथं मृषा ।

निष्फलवचने त्रयः । विगतं फलं विफलम् । विगतं तथा सत्यं यस्मात् वितथम् । मृषो स्यात्प्रकारवति मृषात् मृषा । अव्ययम् ।

विधुरं व्यसनं कष्टं कृच्छ्रं गहनमुद्धरेत् ॥ १८६ ॥

पञ्च कष्टे । कष्टेन विधुनोति शरीरं विधुरम् । व्यस्यते अनेन व्यसनम् । कष्यते (कषति) कष्टम् । कृन्तति छिनत्ति दुःखेन कृच्छ्रम्[७] । गाह्यते गहनम् । उद्धरेत् निस्तरेत् ।

समस्तं सकलं सर्वं कृत्स्नं विश्वं तथाऽखिलम् ।

षट् समस्ते । समस्यते एकीकरोति समस्तम् । समं सर्वे समम् । समानं कलयतीति[८] सकलम् । सरति सर्वम् । कृन्तति भेदयति व्याप्नोति कृत्स्नम् । विशति विशति सर्वत्र विश्वम् । नास्ति खिलं शून्यमस्याखिलम् । निखिलं च ।

---

१ "तिम आर्द्रीभावे" । तिम्यति आर्द्रीभवति तिमिरः । विलम्बशीलो जन आर्द्रवार्द्र इव शीतः स्फूर्तिरहितश्च भवति । २. विस्रसाशब्दस्य प्रकृत्यर्थे प्रमाणान्तरं नास्ति । एवं विस्रावो विस्रम्भोऽपि । विस्रसाशब्दोऽप्यस्यानमपि व्याकरणासम्मतम् । अतोऽत्र विस्रसापि मूलार्थक एव प्रमाणम् । ३ योग्ये चिरेकाग्ये चाप्नोति योग्या 'तव साधु'रिति यत्प्रत्ययः । ४ गुण्यते गुणना । चुरादिविकल्पात् भावे 'ण्यासश्रन्थेति युच्' । तथा स्वार्थे कः । गुणनैव गुणनिका । ५ अभिक्ष्णौति अभीक्ष्णम् । "क्ष्णु तेजने" । बाहुलकात्प्रत्ययः । अन्येषामपीति दीर्घः । इति रामाश्रमः । ६ अत्र मृषाऽलीकशब्दौ नपुंसकौ वितथशब्दश्चाव्ययवाचकः । मृषामोघशब्दौ विकल्पनाशब्दौ च नपुंसकौ अव्ययवाचका इति विवेकोऽत्र । तदुक्तममरे—"मृषा मिथ्या च वितथे" १।८।१५ । 'अलीकं त्वप्रियेऽनृते" ३।३।१२ । 'मोघं निरर्थकम्' ३।१।८१ । अव्ययं तु मृषा मुधा' ३।४।४ । "वितथं त्वनृतं वचः १।८।२१ । इति । ७. कर्षति कृन्तति भेति वा रूप । ८ समस्यते सम समस्तम् । "असु क्षेपणे" । कर्मणि क्तः । ९ तत्पुरुषसमस्तं समम् । १ सह कलाभिर्वर्तते सकलम् ।

वृजिन[1] । कुन्तलः ।

चूडापाशश्च धम्मिल्लः कबरी केशबन्धनम् ॥ १६५ ॥

चत्वारः केशबन्धने । चुड् संवरणे । "कुपरेरच"[2] इन् । नामिनो[3] गुणः । चोदनं चूडा । 'ऊन[4]चूडपीडमृगवतिभ्य इनन्नेभ्य तदायाम्" अङ् प्रत्ययः । कारिकालोपः । निपातनात् ऊपधाया ह्रस्वत्वम् । डस्य डत्वम् । चूडाया शिखाया पाशः बन्धनं चूडापाशः । धम्मिः रोगः । धम्यन्ते केशा बध्यन्ते धम्मिल्लः । कं मस्तकं वृणोति कबरो नद्यादित्वात् । कबरी । ह्रस्वोऽपि कबरिः । बध्नन्ती वा कबरा । केशस्य बन्धनं केशबन्धनम् । वेणी । प्रवेणी । वीणा च

उररीकृतमूरीकृतमङ्गीकृतं तथा ।

अङ्गीकारे । ऊरीप्रभृतीनां कृञा सह समासो वा भवति । तथाहि—ऊरी उररी अङ्गीकारे विस्तारे च । प्रतिश्रुतम् । प्रतिज्ञातम् । उपगतम् ।

अस्तुकारोऽभ्युपगमे

अभ्युपगमे अङ्गीकारे अस्तुकारः कथ्यते । अस्तु करोतीति (करणम्) अस्तुकारः । "कर्मण्यण्" अण् प्रत्ययः । अस्लोपः इति । अङ्गनम् । "अस्त्वागमाद्यन्ता कारे"[5] । मकारागमः ।

सत्यङ्कारः पणार्पणे ॥ १६६ ॥

सत्यापणे सत्यं करोतीति सत्यङ्कारः ।

सौहार्दं सौहृदं हार्दं सौहृद्यं सख्यसौरभम् ।
मैत्री मैत्रेयिकासर्यं सहाग्यं संगतं मतम् ॥ १६७ ॥

दश (एकादश) सख्ये । सुहृदो भावः सौहार्दम् । सौहृदम् । हार्दम् । सौहृद्यमेकमेव वाच्यम् । सख्युर्भावः सख्यम् । सुरभेर्भावः (मेरिषि) सौरभम् । मित्रस्य भावो मैत्री । मैत्र्यां निपुणो मैत्रेयिकः । न वीयते साङ्गर्यम् । सहावो (त्व) ते साहाय्यम् । संगमनम् संगतम् ।

क्षेमं कल्याणमभयं श्रेयो भद्रं च मङ्गलम् ।
भावुकं भविकं भव्यं श्वोवसीयं शिवं तथा ॥ १६८ ॥

दश (एकादश) कल्याणे । क्षियोति अशेषान् क्षेमम् । कल्यते शाप्यते कल्याणम् । कल्यं नीरुक्त्वमनिति वा कल्याणम् । अतिशयेन प्रशस्तं श्रेयस् । शास्तम् । भदते ह्रादते सुखीभवत्यनेन भद्रम् । मं पापं गालयतीति मङ्गलम् । भवनशीलं भावुकम् । 'गमभवमवलम्बपतमृस्थानलपतपशामुकञ्'[6] । प्रशस्तो भवोऽस्यास्तीति भविकम् । पुण्यवतो भवितव्यं भवति भव्यम् । श्व शोभनत्वं वसीयः श्वोवसीयः । श्वोवसीयत्व च । क्वचो 'वसीयस्' । शीयते समुच्छिते दुःखमनेन शिवम् । माध्यविभाषयो अभिधमर कोशोनां शिवं भद्रं ।

---

१ वृजिनशब्दो भङ्गुरवाची । तदुक्तम्—"वृजिनं भङ्गुरं शुभमराल विभ्रमृत्यमित् अभि चि ३।९१ । तद्यथा भङ्गुरत्वेऽपि वृजिनशब्दप्रयोग । २ का सू ३।२।११ । ३ का सू ३।५।२ । ४ का सू ४।५।८२ । अत्र दुर्गवृत्ति ऊनचूडपीडमृगमयतिभ्य इनन्तेभ्यो वा प्राप्त वचनम् ह्रस्वश्चासां । ५ अस्तुकरणमस्तुकार । ६ का सू ४।३।१ । ७ अव्ययनमस्कारं परतर्क नवेत् का सू ३।१।२१ । ८ का सू ४।१।२१ । ९ सत्यस्य करणं सत्यङ्कारः । मारे मम् । कथं विभक्तीलोपत्वमुक्तः । १० का सू ४।४।१४ । ११ का सू २।६।४१ । वृत्तिः २७ ।

वक्ता वाचस्पतिर्यत्र श्रोता शक्रस्तथापि तौ ।
शब्दपारायणस्यान्तं न गतौ तत्र के वयम् ॥ १९९ ॥

अस्य श्लोकस्य सुगमव्याख्या ।

तथापि किञ्चित् कस्मैचित् प्रतिबोधाय सूचितम् ।
बोधयेत्कियदुत्तिष्ठो मार्गेण सह याति किम् ॥ २०० ॥

तथापि मया धनञ्जयकविना सूचितं कथितम् कस्मैचित् प्रतिबोधाय ज्ञानाय । उत्थितो बोधयेत् ज्ञापयेत् । मार्गेणः किं सह याति गच्छति अपि तु न गच्छति ।

प्रमाणमकलङ्कस्य पूज्यपादस्य लक्षणम् ।
द्विसन्धानकवेः काव्यं रत्नत्रयमपश्चिमम् ॥ २०१ ॥

एतद्रत्नत्रयमपश्चिमं नवीनमपूर्वं वर्तते ।

कवेर्धनञ्जयस्येयं सत्कवीनां शिरोमणेः ।
प्रमाणं नाममालेति श्लोकानां हि शतद्वयम् ॥ २०२ ॥

धनञ्जयस्य कवेः सत्कवीनां शिरोमणेः इति अमुना प्रकारेण इयं नाममाला श्लोकानां शतद्वय २ प्रमाणमस्ति ।

ब्रह्माणं समुपेत्य वेदनिनदव्याजात् तुषाराचल-
स्थानस्थावरमीश्वरं सुरनदीव्याजात् तथा केशवम् ।
अप्यम्भोनिधिशायिनं जलनिधिध्वानोपदेशादहो
फूत्कुर्वन्ति धनञ्जयस्य च भिया शब्दाः समुत्पीडिताः ॥२०३॥

अहो लोकाः धनञ्जयस्य च भिया कृत्वा शब्दाः समुत्पीडिताः सम्यक् प्रकारेण पीडिताः फूत्कुर्वन्ति । किं कृत्वा पूर्वं वेदनिनदव्याजात् मिषात् ब्रह्माणं समुपेत्य प्राप्य ईश्वरं तुषाराचलस्थानस्थावरं सुरनदीव्याजात् प्राप्य केशवं श्रीविष्णुं किं विशिष्टं अम्भोनिधिशायिनं जलनिधिध्वानोपदेशात् समुपेत्य सुगमोऽयं श्लोकः ।

इति महापण्डितश्रीमदमरकीर्तिना त्रैविद्येन
श्रीसेन्द्रवंशोत्पन्नेन शब्दवेधसा कृतायां
धनञ्जयनाममालायां प्रथमं काण्डं
व्याख्यातम्

पयः सलिलदुग्धयोः ॥ १३ ॥

पीयते पयः ।

कालप्रकर्षयोः काष्ठा

कालस्य मुहूर्तादिलक्षणः ।

"स्वस्थे नरे सुखासीने यावत्स्पन्देत लोचनम् ।
तस्य त्रिंशत्तमो भागस्त्रुटिरित्यभिधीयते ॥"

अथवा— "सर्षपस्य प्रयत्नेन छिन्नस्य पततोऽम्बरात् ।
छिद्यते यावदध्वानं कालः स (च) त्रुटिः स्मृतः ॥"

प्रकर्षः प्रकर्षता उत्कृष्टता वा । कालश्च प्रकर्षश्च कालप्रकर्षौ तयोः कालप्रकर्षयोः काष्ठा कथ्यते । काशते भास्यते काष्ठा । हान्तोऽयम् ।

कोटिः सङ्ख्याप्रकर्षयोः ।

कुट्यतीति कोटिः ।

"कियती पञ्चसहस्री कियती लक्षा च कोटिरपि कियती ।
औदार्योन्नतमनसां रत्नवती वसुमती कियती ॥"

रन्ध्रसंश्लेषयोः सन्धिः

सन्धानं सन्धिः ।

'सन्धिर्योनौ सुरङ्गायां नाट्याङ्गे श्लेषभेदयोः" इति हैमी[1] ।

सिन्धुर्नदसमुद्रयोः ॥ १४ ॥

स्यन्दते सिन्धुः ।

निषेधदुःखयोर्बाधा

बधनं ( बाधनं ) बाधा । बाधृ प्रतिघाते ।

व्यामोहो मूर्खमौढ्ययोः ।

व्यामुह्यते व्यामोहः[2] ।

कौपीनाम्बरयोर्गुह्यम्

गुह्यते गुह्यम् । गुहू संवरणे । "गुह्यमुपस्थ रहस्ये च" इति हैमी[3] ।

कीलालं रुधिराम्भसोः ॥ १५ ॥

कीलां लातीति कीलालम्[4] । "कीलालं रुधिरे नीरे" इति हैमी[5] ।

मूल्यसत्कारयोरर्घः

अर्घ्यते पूज्यतेऽनेनेत्यर्घः । [6]"हलश्च" इति घञ् । हलन्ताद्धातोर्घञ् । "न्यङ्क्वादीनां कुश्च"[7] ।

जात्यः श्रेष्ठकुलीनयोः ।

1 अने० स० २।२५७ । 2 व्यामोहशब्दस्य मूर्खार्थे मूर्ख मुग्धम् । 3 अने० स० २।१५८ ।
4 कीलाः ज्वालामालाः लाति आदत्ते । अग्नेः पर्यायवाची । इति अने० विग्रहः । रुधिरार्थे तु टीकोक्त । 5 अने० स० ३।६८१ । 6 जै० सू० ४।३।११ । 7 जै० सू० ४।३।२१ ।

मेघकुम्भीनयोर्भ्रास्यः । भ्रास्यं भषी भ्रास्य ।

मेघवत्सरयोरब्द[1]

अब्दतीति अब्दः । कुम्भावच[1]—"कुम्भकुम्भमनाभ्याः । "अब्दः संवत्सरे मेघे मुस्तके गिरिभिद्यपि[२] ।"

तार्क्ष्यो हयगरुत्मतोः ॥ १६ ॥

तृक्षस्यापत्यं तार्क्ष्यः । पुंसि ।

स्तम्भतास्थूणयोः स्तम्भ

स्तम्भु इति सौत्रोऽस्य पाठः ।

चर्चा चिन्ताविचर्कयोः ।

चर्चनं चर्चा ।

हरकीलकयोः स्थाणु

तिष्ठतीति स्थाणुः ।

स्वैरं स्वच्छन्दमन्दयोः ॥ १७ ॥

स्वस्य ईरः स्वैरः । [३]स्वस्वाद ऐरूर्मीरेरियोरपि वक्तव्यम् । यथा भाष्यकारे—

"स्वैरं विहरति स्वैरं शेते स्वैरं च जल्पति ।
भिक्षुरेकः सुखी लोके राजचौरभयोज्झितः ॥"
"स्वैरो मन्दे स्वतन्त्रे च" इति हैमी[४] ।

शङ्कुः सङ्कीर्णविवरे पलालाग्नौ च कीलके ।

सस्यायाम्

शं करोति कुरुते वा [५]शङ्कुः ।

काननोद्भूते वह्नौ दावो दवोऽपि च ॥ १८ ॥

काननोद्भूते वह्नौ दावो दवोऽपि च । दुनोतीति दवः । दावः । वा[६] ज्वलादिदुनीभुवो णः ।

कीनाशः कृपणे मृत्यौ कृतान्ते पिशिताशिनि ।

तथा पुण्यजनान् प्राहुः सज्जनान् राक्षसानपि ॥१९॥

लोभेन क्लिश्यते नाश्यते कीनाशः । तालव्यः ।

विरोचनो रवौ चन्द्रे दनुजन्मनि हुताशने ।

विरोचते इत्येवंशीलो विरोचनः ।

हंसो नारायणे ब्रह्मे यताश्रम सितच्छदे ॥ २० ॥

हन्तीति हंसः ।

सोमश्चन्द्रोऽमृतं सोमः सोमो राजा मृगादिम् ।

सोमः प्रतानिनीभेदः सोमपोऽगस्त्यदिक्पतिः ॥ २१ ॥

---

१ का उ सू ३।९४ इति समस्यया । २ अने स २।२२१ । ३ स्वस्वैरेरिण्यौरितु का क पृ १८।४ अने स २।४८२ । ५ शङ्कवे ऽस्मात् शङ्कुः । 'शकि शङ्कायाम । चौरा दिक उः । ६ का सू ४।२।५१ इति समस्यया "टुदु उपतापे" ।

पुम् अभिधये। अनेन सर्वेषां सामनिका ज्ञातव्या।

अजो विधिरजो विष्णुरजः शम्भुरजस्तमः।

अजश्छैवार्षिको मीहिरजो रामपितामहः॥ २२॥

न जायते नोत्पद्यते अजः।

शुद्धेऽनुपहते शङ्खौ ब्राह्मणे सचिवोत्तमे।

आषाढेऽप्यात्मसचिवो ब्रह्मचर्ये शुचिर्मतः॥ २३॥

मतः कथितः। एतेष्वर्थेषु शुचिशब्दः। शोचति जनो देहान्तेऽत्र शुचिः। तथा च यश-स्तिलकचम्पूकाव्ये–

"न स्त्रीभिः सङ्गमो यस्य सर्वारम्भविवर्जितः।

तं शुचिं सर्वदा प्राहुः मारुतं च हुताशनमिति॥

अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु।

अर्थशब्दः पठ्यते। अभिधेयश्च शब्दो वाचकः शब्दमध्ये योऽस्त्यर्थः स वाच्यः अभिधेयश्च कथ्यते। रा सुवर्णम्। वस्तु—अस्त्यादिसौहित्यादिर्वा। गैरिकाभिधं (विज्ञं च) वस्तु। प्रयोजनं कार्यम्। निवृत्तिश्च मुक्तिः। तासु। ऋ गतौ। अर्यते इत्यर्थः।

भावः पदार्थचेष्टास्वसत्ताभिप्रायजन्मसु॥ २४॥

एतेष्वर्थेषु भावः पठ्यते। भवतीति भावः। 'भू'[1] धातोर्विनुतीभूतो घञ्।

प्रायो भूम्नोपमातर्प्यप्रभृत्यनिवृत्तिषु।

एतेष्वर्थेषु प्रायः[2] शब्दः।

अन्तः पदार्थसामीप्यधर्मसत्त्वव्यतीतिषु॥ २५॥

एतेष्वर्थेषु अन्तः।

अक्षो द्यूते शकटाङ्गे नयनादौ विभीतके।

द्यूते शकटाङ्गे रथचक्रावयवे नयनादौ विभीतके पूतनानाम अक्षो वर्तते।

सारः श्रेष्ठे बले वित्ते कोशे जलचरे स्थिरे॥ २६॥

श्रेष्ठे बले वित्ते कोशे कोशो वा पाठः। जलचरे, स्थिरे सारो वर्तते। सरत्यनेनेति सारः। [3]"शसमस्त्यवीरन" इति परस्मैपद घञ्। स्मर्यते "अकर्तरि च कारके संज्ञायाम्[4]" इति घञ्। "सारो मज्जास्थिरांशयोः बले श्रेष्ठे च" इति हैमी।

वाचि वारि पशौ भूमौ दिशि लोम्नि रवौ दिवि।

विशिखे दीधितौ दृष्टावेकादशसु गौर्मतः॥ २७॥

पूर्वा गच्छतीति गौः। गमेर्डोः।

चन्द्रे सूर्ये यमे विष्णौ वासवे दर्दुरे हये।

मृगेन्द्रे वानरे वायौ दशस्वपि हरिः स्मृतः॥ २८॥

हरतीति हरिः।

---

१ का सू ४।२।५५। २ प्रत्ययमर्न प्राय। 'इण गतौ। इण्। ३ "र्वेःस्थिरत्यादि मत्स्यसारे" ३ शा ५।३।१७। ४ का सू ४।५।४। ५ अमरे त २।७७८।

पद्मे करिकरप्रान्ते व्योम्नि खड्गफले गदे ।
वाद्यभाण्डमुखे तीर्थे जले पुष्करमष्टसु ॥ २९ ॥

पुष्णातीति पुष्करम् ।

शृङ्गारादौ कषायादौ घृतादौ च विषे जले ।
निर्यासे पारदे रागे वीर्येऽपि रस इष्यते ॥ ३० ॥

शृङ्गारादौ–
"शृङ्गारहास्यकरुणारौद्रवीरभयानकाः ।
बीभत्साऽद्भुतशान्ताश्च नव नाट्ये रसाः स्मृताः ॥"

कषायादौ—तिक्ताम्ललवणकटुकषायेषु । घृतादौ—दुग्धदधिघृततैलजलेक्षुरसेषु । विषे जले निर्यासे द्रवरसविशेषे पारदे रागे, वीर्येऽपि रस इष्यते ।

तीर्थे प्रवचने पात्रे लब्धाम्नाये विशारदे ।
पुण्यारण्ये जलोत्तारे महासत्त्वे महामुनौ ॥ ३१ ॥

एतेष्वर्थेषु तीर्थम्[1] ।

धातुः पञ्चसु लोहेषु शरीरस्य रसादिषु ।
पृथिव्यादिचतुष्के च स्वभावे प्रकृतावपि ॥ ३२ ॥

पञ्चसु लोहेषु सुवर्णरजतताम्ररीतिकांस्येषु । शरीरस्य रसादिषु रसासृङ्मांसमेदोऽस्थिमज्जशुक्रेषु । पृथिव्यादिचतुष्के च पृथिव्यप्तेजोवायु (वनस्पति) षु स्वभावे वातपित्तश्लेष्मादिषु एतेष्वर्थेषु धातुः पठ्यते । दधातीति धातुः ।

प्रधानभूषणाकल्पभूपापुण्ड्रप्रभावना ।
ध्वजलक्ष्मतुरङ्गेषु ललामो नवसु स्मृतः ॥ ३३ ॥

एतेष्वर्थेषु [2]ललामः । ललामम् ।

आकृतावक्षरे रूपे ब्राह्मणादिषु जातिषु ।
माल्यानुलेपने चैव वर्णः षट्सु निगद्यते ॥ ३४ ॥

आकृतौ अक्षरे रूपे ब्राह्मणादिषु जातिषु माल्यानुलेपने च वर्णो[3] निगद्यते ।

अकारादावुदात्तादौ षड्जादौ निस्वने स्वरः ।

एतेष्वर्थेषु स्वरः कथ्यते । अकारादौ—अ आ इ ई उ ऊ, ऋ ॠ, ए ऐ ओ औ । उदात्तादौ— "उच्चैरुपलभ्यमान उदात्तः," "नीचैरनुदात्तः" "समाहारः स्वरितः"[4] । षड्जादौ—
"निषादर्षभगान्धारषड्जमध्यमधैवताः ।
पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ॥"

निस्वने शब्दे ।

सङ्केताचारसिद्धान्तकालेषु समयः[5] स्मृतः ॥ ३५ ॥

समयते समयः ।

---

1 तरति तीर्यते वाऽनेन तीर्थम् । 2 लड विलासे" । ललयोरभेदात् ललतीति ललामः । 3 'वर्ण शब्दे' । वर्णयति वर्ण्यते वा वर्णः । घञ् कर्मणि अच्‌ वा कर्तरि । 4 तारस्य सू. २ । 5 अम को १।७।१ ।

तन्त्रं प्रधाने सिद्धान्ते सैन्ये तन्तौ परिच्छदे ।

तन्यन्ते प्रमुखतायन्ते शब्दा अनेनेति तन्त्रम् । क्रमस्तव ।

सत्त्वमोऽप्रसि सहायायामुत्साहे स्वेऽसि जन्तुषु ॥ ३६ ॥

एतेष्वर्थेषु सत्त्वम् ।

रूपादौ तन्तुषु व्यायामप्रधाने नये गुणः ।

गुणयतीति गुणः ।

[1] ज्ञानचारित्रमोक्षात्मभुविषु प्रवचाग्वरा ॥ ३७ ॥

वरा विरिक्ता ।

अवकाशे क्षणे वस्त्रे बहिर्योगे व्यतिक्रमे ।

मध्येऽन्तःकरणे रन्ध्रे विशेषे रहितेऽन्तरम् ॥ ३८ ॥

एतेष्वर्थेषु अन्तरः ।

हेतौ निदर्शने प्रश्ने भुतौ कण्ठसमीकृतौ ।

आनन्तर्येऽधिकारार्थे माङ्गल्ये चाथ इष्यते ॥ ३९ ॥

इष्यते कथ्यते । अथ एष्वर्थेषु ।

हेतावेवंप्रकारादौ व्यवच्छेदे विपर्यये ।

प्रादुर्भावे समाप्तौ च इतिशब्दः प्रकीर्तितः ॥ ४० ॥

प्रकीर्तितः कथितः इतिशब्दः एतेष्वर्थेषु । इण् गतौ । इ । क्ति इत्यमादिकमर्थमिति । "इति [2]प्रमुर्वंति मप्रतिम्पो वच्म्यद्" इत्यनेनेतिप्रत्यय । इति भावम् । प्रव ति । "[3]...चान्" विशेषः ।

धर्मो मनुष्याहिंसादावुत्पादादावये नये ।

द्रव्यक्रियाश्रये चित्ते जीवादौ दात्म्यैकृते ॥ ४१ ॥

एतेष्वर्थेषु धर्मः । चरतीति धर्मः ।

मूर्तिमत्सु पदार्थेषु संसारिण्यपि पुद्गलः ।

एतेष्वर्थेषु पुद्गलः ।

अकर्मकर्मनोकर्मजातिभेदेषु वर्गणा ॥ ४२ ॥

( अकर्म पुद्गलस्कन्धाः ) कर्म-ज्ञानावरणादि नोकर्म—शरीरादि । जातिर्गोत्वादि । एतेषु वर्गणा वर्तते ।

ऐश्वर्यस्यासमग्रस्य वीर्यस्य यशसः श्रियः ।

वैराग्यस्यावबोधस्य षण्णां भग इति स्मृतः ॥ ४३ ॥

भजन्त्यस्मिन्निति [4]भगः ।

प्राहुः कैवल्यमार्हन्त्ये विविक्तं निर्वृतामपि ।

---

१ कातन्त्रेऽस्य सूत्रस्य रूपं नोपलभ्यम् । २ का० ल० २।६।४ । ३ पूर्वन्ते पुनः पुनः नश्यन्ते इति पुरः । गलन्ति विलीयन्ते गलाः । पुरश्च ते गलाश्च पुद्गलाः । पृषोदरादित्वात्सम् ऋ० । ४ भज्यते सेव्यते चार्यते वा भगः ।

केवलस्य भावः कैवल्यम् ।

लब्धिः केवलबोधाद्यविष्टासौ नियतौ श्रियाम् ॥ ५४ ॥

लम्भनं लब्धिः ।

अनेकान्ते च विधातौ स्यान्निपातः श्रुते क्वचित् ।

[1]स्यात् भवेत् एतेष्वर्थेषु निपातः ।

भ[2]ट्टारको धर्मचन्द्रस्तत्पट्टे धर्मभूषणः ।
तत्र देवेन्द्रकीर्त्तिः श्रीकुमुदचन्द्रस्ततः परम् ॥ १ ॥
धर्मचन्द्रस्ततो ज्ञानसागरस्तत्पदेऽभवत् ।
तेन पुस्तकमेतद्धि दत्त ( लोकहितेच्छया ) ॥ २ ॥

इति

## धनञ्जयनाममाला सटीका समाप्ता

---

१ स्यात् इत्याकारको निपात एतेष्वर्थेषु इति सम्बन्धः । २ इतः परं मुद्रितपुस्तकेष्वधिकः पाठ उपलभ्यते तद्यथा— 'पर्यन्तादौ मतो पर्व मतः शाले प्रसेत्स्यपि ॥५५॥ परमात्मा जिने सिद्धे पर मेरुपर्वतादिषु । सिद्धाः सिद्धनिरयानामर्हल्लिङ्गभिधामपि ॥५६॥ अर्हल्लिङ्गमिति [illegible] ॥ अर्हदादीनपि [illegible] ॥५७॥ इति । ३ अत्रायुक्तिर्दोषात्किञ्चित्पाठभेदः च शोधित इत्यर्थः संगृह्यः ।

